ओ३म्

# गुरुकुल-पत्रिका

[ गुरुकुल कांगड़ी विश्वविद्यालयस्य मासिक पत्रिका ]

माघ २०२४, जनवरी-फरवरी १९६८, वर्षम् २०, अङ्कः ६, पूर्णाङ्कः २३४

## श्रुति-सुधा

(ऋषिः—मेध्यातिथि काण्व । देवता—ऋभवः । छन्दः— २, गायत्री)

य इन्द्राय वचोयुजा ततक्षुर्मनसा हरी ।
शमीभिर्यज्ञमाशत ॥ ऋ० १।२०।२

( ये ) जिन ऋभु रश्मियों ने ( इन्द्राय ) दिव्य मन के लिये ( वचोयुजा ) ब्रह्म संवलित दिव्य वाक् से युक्त ( हरी ) ज्ञानवाहक और आज्ञावाहक (Sensory Motor) नाड़ियों को ( मनसा ) मन से युक्त करके ( ततक्षुः ) तक्षण किया है और उन ऋभुओं ने ( शमीभिः ) अपने कर्मों से ( यज्ञं ) इस शरीर रूपी यज्ञ को ( आशत ) व्याप्त किया हुआ है ।

इन्द्र दिव्यमन व बुद्धिसूर्य को कहते हैं । उसका वहन करने वाली ज्ञान-वाहक व आज्ञा-वाहक नाड़ियां हरी कहलाती हैं । सामान्य मनुष्य की ये नाड़ियां हरी नाम को नहीं धारण करतीं । परन्तु जब मनुष्य में इन्द्र अर्थात् दिव्य मन का प्रादुर्भाव हो जाता है उस समय ये हरी नाम से कही जाती हैं । ये नाड़ियां दिव्य वाक् ( वागष्टमी ब्रह्मणा संविदाना ) से युक्त होती हैं । इनको दिव्यवाक् से युक्त करना और देवरूप इन्द्र का वाहक बनाना ऋभुओं का काम है । इन ऋभुओं के प्रभाव से संपूर्ण शरीर में देवत्वनिर्माण का कार्य व तक्षण प्रारम्भ हो जाता है ।

पूर्वोक्त–गु० श्री० जोशीमहोदयैः स्वग्रामस्थानां गु० श्री० म० स० पेडसेमहोदयाना 'प्रवचनकारः' इति परिचय मे दत्वा तेषां निवासव्यवस्था मया स्वावासे कृता। चेत् तेषां सा सुखावहा भवेत्, समानशीलत्वाच्च उभयोरपि प्रमोदाय स्यात् इति स्वेच्छा प्रकटिता। मया सानंदं सा व्यवस्था अनुमता। नचिरात् गीतोपनिषद्-मनुस्मृतिप्रभृतिग्रथानां सूक्ष्मम् अध्ययनम् प्रांजल-गीर्वाणभाषेयाः प्रभुत्वं, प्रपचानर्थोद्भूतं तीव्र वैराग्य, देशसेवाव्रतग्रहण, तस्य निष्ठापूर्वक परिपालन, स्वभावे आर्जवम्, इत्येतद्-गुणोच्चयेन प्रभावित. अहं, मम कन्यया सह तान् स्वकुटुंबीयः इति अभावयम्। काव्यशास्त्रविनोदचर्चायां तै. सः नीता. दिवसाः अविस्मरणीया. एव।

कै० माधवानुजविरचितायाः 'जाईची फुलें' कविताया मया कृतेन संस्कृतानुवादेन परिचिताः गु० श्री. चोलकरमहोदया. ( सेवानिवृत्तमुख्याध्यापकाः ) वृढतरं परिचिताः स्नेहबद्धाश्च कै० पाध्येशास्त्रिरामायण-निमित्तेन। पाध्येशास्त्रिरचनायां दोषस्थलदर्शनं कार्यम् एतेषां, दोषान् दूरीकृत्य श्लोकशुद्धीकरणं च मदीयम् आसीत्। तत्कार्ये समाप्तेऽपि, मदीय-नव-नवकाव्यरचनां, दोषावगम्यहेतुना वारवार श्री० चोलकरमहोदयेभ्यः श्रावयामि, शुद्धीकरणे च चर्चा तैः सह करोमि स्म। ते सर्वदा मह्यम् अभीष्टं साहाय्यं दातुं उत्सुकाः प्रतीताः। विद्वानपि गर्वरहितः परोत्कर्षे च मोदमानः स. सज्जनः मया अक्रूरमेव लब्धः येथेष्टं, इति मे महद्भाग्यं खलु मन्ये। तस्य सुचिर-मार्गदर्शनेन च कालेन, स्वरचना निर्दोषतायां जनितविश्वास. अयं जनः, शनकैः विसृष्टवान् तत्साहाय्यकरं, यथाचलनक्षमत्वं प्राप्त शिशुः गुरुजनस्य।

एम.ए.उपाधिकृते अधीयानाः पूर्वोक्ताः श्री समुद्रमहाशया ( बी० पी० टी० रेलेलेखनिकाः ) इदानीं प्राध्यापका-गीर्वाणभाषानुरागित्वात् वारं वारं दर्शनेन, नवरचनायाः रसग्रहणेन, अभीष्टग्रंथस्य प्रापणेन, ग्रंथ-प्रकाशनचर्चया च सर्वदा सादरं साहाय्य दत्वा, सौहार्दं वर्धयंतः मदुत्कर्षाय यावच्छक्य प्रयतन्ते।

श्री० यशवंतराव–कुलकर्णी ( मोहमयी–महापालिका–लेखनिकः इदानीं वाई-द्रविड-विद्यालय-शिक्षका. ) संस्कृतपंडितः यावत् कल्याणनगरे न्यवसत् तावत्, तथा मध्यलोहमार्गकार्यालये प्रधान. आलेखकः ( Head draftsman ) पर देवभाषानुरागी रसिकः श्री० का० वि० कुलकर्णी, सेवानिवृत्तशिक्षकः गु० श्री रामभाऊ अभ्यंकर, एते सततं मां प्रोत्साहयति नवरचनायां, भूयो भूयो दर्शनेन, विमर्शेन यथावसर यथाशक्यं च नवसाहित्यरसग्रहणेन।

सुभाषचरितस्य हस्तलिखितपरीक्षण-शुद्धीकरण- प्रस्तावना- अभिप्रायदान- मुद्रितपरीक्षणादिविषयेषु बहुभिः मान्यवरैः विद्वद्भिः सुहृद्भिश्च उपकृतोऽहम्। तेषां सर्वेषां नामोल्लेखः तद्ग्रंथे मया सादरं कृतः वर्तते। तेषां केषांचित् नामोल्लेखः अत्र क्रियते। डॉ. श्री. के० ना० वाटवे ( प्रस्तावना ), श्री० अप्रबुद्ध, प्रा० श्री० अनंतशास्त्री फडके, सा० श्री. बालशास्त्रीहरदास, श्री० पचौरीशास्त्री ( कासगज ), कै० डेग्वेकरशास्त्री (ठाणे) (अभिप्रायः) श्री० श्रीप्रकाश— तदानींतनः मुंबईराज्यपालः–– (प्रोत्साहनपरशुभेच्छाः)। श्री० गं० के० गुर्जरशास्त्रिभिस्तु (डोंबिवली) मुद्रितपरीक्षणोत्तरम् अंतः स्फूर्तः अनाहूतः अभिप्रायः प्रेषितः। तत. अंतिमश्लोकः अयम्—

"काव्यं प्रसादमधुरं भवतो विलोक्याऽऽ-
लोक्यमानहृदयोऽस्मि प्रभावरिद्रः।
उत्साहभंगकरवार्धकवर्धितेहाः
काव्योद्भवे कविवरा विरला भवद्धाः॥"

(शेषागामिन्यङ्के)

# ब्रह्मचर्येण तपसा देवा मृत्युमपाघ्नत

लेखकः—ब्र० याज्ञवल्क्य., वानप्रस्थाश्रम—ज्वालापुरं (सहारनपुरम्)

इह त्रिषु लोकेषु वेदादिसच्छास्त्रप्रतिपादितानि, सत्यपथपथिकै: सद्भिरनुभूतानि, अभ्युदयनिःश्रेयसकराणि, अहिंसासत्यादीनि, यानि कानिचिदपि तपांसि विलसन्ति, निखिलेषु तेषु मानवेष्टोपकरणेषु तावच्चारुतम व्रतमिदं ब्रह्मचर्यम्। सर्वे हि जना ब्रह्मचर्योपयोगितामनुभवन्ति। नह्यन्तरेण ब्रह्मचर्यरसायनं कश्चिदपि जीवनानन्दमधिगच्छति। एतेन खल जायते निर्बलोऽपि बलवान्, कुरूपोऽपि रूपवान्, निर्बुद्धिरपि सुधीः। लोके च सकला गृहस्थवानप्रस्थसन्यासाश्रमव्यवस्था सम्पाद्यतेऽनेनैव। अनेनैव भूपतिस्त्रायते दस्युभ्यो राष्ट्रं प्रजापालनञ्च चर्कर्ति। अनेनैव वैज्ञानिका निखिलज्ञानविज्ञानप्रणालीमाऽऽकलयन्ति जगत्याञ्च नूतनैर्नूतनैराविष्कारग्रामैरुपकुर्वन्ति। एतदनुकम्पयैव जगन्नियन्ता भगवान् प्रजापतिरपि जन्मस्थितिभङ्गचक्रं चालयति।

यस्मिन् राष्ट्रे किल ब्रह्मचर्यनिष्ठा नागरिका विलसन्ति। नूनं तद्राष्ट्रं समस्तज्ञानविज्ञानस्वरूपमवगच्छति। सुतरां हि तत्र निवसन्ति सौभाग्यवत्तमा विचक्षणाः। यत्रेदं महत्तरं ब्रह्मचर्यव्रतं मनुष्येषु वरीवर्ति। नापि तत्र प्राणिनस्तापत्रयेण पीड्यन्ते। ब्रह्मचर्यनिष्ठेन नृपतिनैव राष्ट्रसञ्चालनव्यवस्था सम्भाव्यते व्यवस्थापयितुन्न ब्रह्मचर्यपराङ्मुखेन राज्ञा। तथाहि भगवताऽथर्ववेदेनापि सम्यक्प्रकारेण तत्परिप्रकाश्यते— ब्रह्मचर्येण तपसा राजा राष्ट्रं विरक्षति ॥ अथर्व० ११-५-१७॥

अन्यत्राप्युपन्यस्तम्—आयुस्तेजो बलं वीर्यं प्रज्ञाश्रीश्च महायशः। पुण्यं चाऽपि प्रियत्वं च हन्यतेऽब्रह्मचर्यया। (गौतमस्मृति अ० ४) ब्राह्मं तपो ब्रह्मचर्यं चारु चात्यन्तनिश्चयाः। रसायनमिदं ब्राह्ममायुष्कामः प्रयोजयेत् ॥ चरक चि० अ० १ ॥ शान्ति कान्ति स्मृति ज्ञानमारोग्यं चापि सन्ततिम्। यदिच्छति महद्धर्मं ब्रह्मचर्यं चरेदिह ॥ धन्वन्तरि ॥ धर्म्यं यशस्यमायुष्यं लोकद्वयरसायनम्। अनुमोदामहे ब्रह्मचर्यमेकान्तनिर्मलम् ॥

अष्टाङ्ग उ० अ० ४०॥

ब्रह्मचर्यं महान् यज्ञो ब्रह्मचर्यं महत्तपः।<br>
ब्रह्मचर्येण सर्वोऽर्थसिद्धो भवति भूतले ॥<br>
शारीरं मानसं वापि स्वास्थ्यमाध्यात्मिकं तथा।<br>
अभीष्टं चेत्तदा सर्वं ब्रह्मचर्यं तदिष्यताम् ॥<br>
नानाधिव्याधिखिन्नानां मर्त्यानामौषधं परम्।<br>
निराशायाः समाधानं ब्रह्मचर्यं तदिष्यताम् ॥

॥ अमृतम० ॥

इतस्तु दृश्यतामिह भारतखण्डे कदाचिदासीत् सुतरां ब्रह्मचर्यमयी निष्ठाऽऽबालम्। तदा हि प्रान्ते-प्रान्ते जनपदे-जनपदे ग्रामे-ग्रामे मठे-मठे वसुरुद्राऽऽदित्यनामानो ब्रह्मचारिणो ब्रह्ममननवेदाध्ययनशुक्रसंरक्षणक्षमा आसन्। ते तत्रभवन्तो भवन्तः श्रीमन्तो दीर्घकालनैरन्तर्यसत्कारासेवितेन ब्रह्मचर्यानुष्ठानेन कामक्रोधमोहभयेर्ष्यादिविविधचित्तविकारसन्तानवितानं निश्शेषेण भस्मीकृत्य समस्तविद्याभण्डारादिमूलं, सकलब्रह्माण्डभाण्डस्य जन्मस्थितिभङ्गकर्त्तारं, सर्वज्ञत्वसर्वव्यापकत्वनिराकारत्वादिगुणवन्तं, सच्चिदानन्दस्वरूपं, परमात्मानमधिजग्मुः। तेषां श्रीमतां तत्रभवतामासीत् खलु दृढ़तमा चित्तधारणैषा यद् अन्तरेण ब्रह्मचर्यं तपो नोपायान्तरेण केनापि मनुजानामिष्टतमोपलब्धिः शक्या समधिगन्तुमिति। तेन हेतुनैव ते परस्सहस्रा आदित्यवर्णिनो बभूवुः। संयमनिष्ठजीवनत्वाच्च तेषां कृते परिवारनियोजनविषयक-

नानायन्त्रोपयन्त्रनिर्माणसमस्याकलङ्कयङ्कस्यानिवार्यता समजनि ! नापि तदानीमन्त्रसमस्या भ्रष्टाचारनिरोध समस्यासमाधानाय मुहुर्मुहु खल्वन्तरङ्गपरिषत्सदस्यनिर्वाचन सबभूव । तदा त्वार्यखण्डे "मित्रस्य चक्षुषा समीक्षामहे । कृण्वन्तो विश्वमार्यम् । मैत्रीकरुणामुदितोपेक्षाणा सुखदु ख-पुण्यापुण्यविषयाणा भावनातश्चित्तप्रसादनम् । धर्मं चर । सत्य वद । स्वाध्यायान्मा प्रमद । इत्यादि वेदशास्त्रोपनिषद्वाक्यप्रतानपरवशात् सुचित्तमहापुरुषबाहुल्याच्च परिवारनियोजनभ्रष्टाचारनिरोधसमस्याया प्रसङ्गगन्धोऽपि नागात् ।।

को न जानीते श्रीमता रामचन्द्रलक्ष्मण-हनुमता ब्रह्मचर्यमयीनिष्ठाम् ? को न वेत्ति खलु महाभारतकालस्थान् निखिलयुद्धकलानिष्णातान् जितकालान् श्री भीष्मकृष्णमहाभागान् ? केन न स्मियन्ते साङ्ख्ययोगन्यायवैशेषिकमीमासावेदान्त-शास्त्ररचयितार श्री कपिलपतञ्जलिगौतमकणाद-जैमनीयव्यासभगवत्पादा ? कोऽय हतभाग्यतर श्रीजगद्गुरुशङ्करमहर्षिदयानन्दभगवत्पादाश्च नाऽवगच्छति ?" किन्नाम तस्याऽविज्ञातगान्धिसुभाष पटेलस्य ? सकलास्नत्रभवन्तो भवन्तस्ते ब्रह्मचर्य-सङ्कल्पैकधिय सबभूवु ।।

परञ्चेतस्तु विलोक्यतामिहार्यखण्डे कलिकाल-व्याजपरवशेन साम्प्रत काऽवस्था सवृत्ता ? अहह ! क्वाद्य धर्मप्रधाने देशे धर्मस्वरूपो विलोक्यते ? क्वाद्य ब्रह्मचारिण सतत साङ्गोपाङ्गवेदानधीयते ? क्वेदानीमिह प्राणायामादियोगजक्रियाभिरूर्ध्वरेतोविद्याऽनुष्ठीयते ? क्व साम्प्रत परमपुरुषार्थतत्त्व-ज्ञानाय विद्यार्थिनोऽभ्यस्यन्ति ? क्वाऽधुनाऽष्टाभ्यो वै स्मरणकीर्त्तनकेलिप्रेक्षणगुह्यभाषणसङ्कल्पाऽध्यवसायक्रियानिष्पत्तिनामभ्यो मैथुनेभ्यो ब्रह्मचारिणो निवार्यन्ते निवर्त्तन्ते च ? क्व प्रतिमठम्-पण्डितप्रकाण्डा श्रोत्रिया ब्रह्मनिष्ठा ?

हा हन्त !! साम्प्रतन्तु महर्ष्यृषिमहाभागाना परम्परास्तिरस्यिन्ते भारतखण्डे । सहशिक्षा-छायाचलचित्रश्रृङ्गारतादिविविधब्रह्मचर्यप्रतिकूलसाधनानुष्ठानेन न दृश्यते किल ब्रह्मचर्यगन्धमात्रमपि । "ब्राह्मणेन निष्कारणो धर्म षडङ्गो वेदोऽध्येयो ज्ञेय ' इति पातञ्जलवाक्यन्तु विलयतामेव गतम् । अद्य तु अशेषत उपस्थसयम विहाय परिवार-नियोजनसम्पादनाय नानायन्त्राणि, गर्भपातसाधनान्यनुष्ठीयन्त । इदानीन्तना पुरुषास्तु त्यक्त-धर्माणोऽपि धर्मपरायणा , श्रृगाररसास्वाद्यमाना अपि तपस्विन अविदितनीतयोऽपि नीतिनिष्णाता वेदाध्ययनशून्या एव वेदान्तज्ञा , यौगिकज्ञानमन्तरेण एव योगाचार्या , नित्यानित्यवस्तुविवेकशून्या एव मुमुक्षव कि बहुना साम्प्रतन्त्वपरैवास्था वरीवर्ति भारतखण्डे नहि केनापि शक्यते लेखितुम् ।। अलमतिविस्तरेण बुद्धिमत्सु ।।

ननु किमिदन्नाम ब्रह्मचर्य यदन्तरेण नरेष्ट-तमोपलब्धिर्न शक्या भवितुम् ? केन प्रकारेण च तदुपलब्धि सम्भवति लोके ? तदुच्यते--ब्रह्मचर्य-शब्द तावत्पदद्वय विलसति । ब्रह्मपद चर्यञ्च । तत्र--' ब्रह्म" प्राधान्येन परमात्मा-वेद-वीर्य-आदिषु अर्थेषु प्रयुज्यते । चिन्तनाध्ययनसरक्षणेष्वर्थेषु च चर्य शब्द । तदेवमनेन ब्रह्मचर्येण शब्देन परमात्मचिन्तन – वेदाध्ययन – वीर्य – सरक्षणानि अभिधीयन्ते । युगपदेव ब्रह्मचिन्तनवेदाध्ययन-वीर्यसंरक्षणाऽनुष्ठानेन ब्रह्मचर्यसुरक्षा भवितुमर्हति । तथाहि ब्रह्मचिन्तन विना वेदाध्ययनवीर्यसरक्षणे न सम्भवत । नापि वेदाध्ययनमन्तरेण ब्रह्मचिन्तनवीर्य-सरक्षणयोर्विवेक शक्यते कर्त्तुम् । तथैव वीर्य-सरक्षणादृते ब्रह्मचिन्तनवेदाध्ययनसामर्थ्य न प्राप्नोति । तस्माद् यौगपद्येन साधनत्रयेण प्रभुचिन्तन-

वेदाध्ययनवीर्यसंरक्षणात्मकेन ब्रह्मचर्यसुरक्षा विज्ञायते तच्च प्रदर्श्यते—

## ब्रह्मचिन्तनम्—१

दृश्यते तावत्प्रकाशक्रियास्थितिशीलानां सत्त्वरजस्तमसां क्षणे क्षणे परिवर्तनम्। अस्मच्चित्तेषु च सुखानि दुःखानि च परिवर्तन्ते। तत्रापि दुःखमेवाऽधिकतरम्। प्रतिकूलवेदनीयत्वात् सर्व क्लेशं पराभवितुं चिकीर्षन्ति। त्रिविधदुःखात्यन्तनिवृत्तिरत्यन्तपुरुषार्थं एव सर्वेषां मनुजानामभिमतम्। तदुपलब्धिस्तु ब्रह्मचिन्तनमनननिदिध्यासनसाक्षात्कारेण भवति। तथाहि भगवत्या श्रुत्या परिस्फुट्यते—तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय ॥ यजु० ३१.१८॥ क्लेशपर्यवसानं परमपितृपरमात्मनि विज्ञाते सम्भवति नोपायान्तरेणेति भावार्थः। अन्यत्राप्युक्तम्—आनर्थक्यमधीतसकलवेदस्याऽविज्ञातेश्वरस्य ऋचो अक्षरे परमे व्योमन् यस्मिन्देवा अधि विश्वे निषेदुः। यस्तन्न वेद किमृचा करिष्यति य इत्तद्विदुस्त इमे समासते ॥ ऋ० १ १६४ ३९॥ वेदाध्ययनेन तदैव महत्तमो लाभो भवितुमर्हति, यदा ब्रह्मोपलब्धिस्स्यादितरथाहि निष्फलत्वापत्तिः। तस्माद् ब्रह्मचारिणो ब्रह्मचर्यसुरक्षायै ब्रह्मचिन्तनं समाचरेयुः। स ब्रह्मविज्ञानार्थं ब्रह्मचारिणो ब्रह्मचर्यमनुतिष्ठन्ति स्म, इत्यप्यधोऽङ्कितेन वाक्यसङ्घातेन विज्ञायते—

> सत्येन लभ्यस्तपसा ह्येष आत्मा
> सम्यग्ज्ञानेन ब्रह्मचर्येण नित्यम्।
> अन्तः शरीरे ज्योतिर्मयो हि शुभ्रो
> यं पश्यन्ति यतयः क्षीणदोषाः
> ॥ मुण्डक० ३.१ ५॥
> सर्वे वेदा यत्पदमामनन्ति तपांसि
> सर्वाणि च यद् वदन्ति।
> यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते
> पदं संग्रहेण ब्रवीम्योमित्येतत् ॥
> कठ० २ १.५॥

तान्ह स ऋषिरुवाच भूय एव तपसा ब्रह्मचर्येण श्रद्धया संवत्सरं संवत्स्यथ यथाकामं प्रश्नान् पृच्छत यदि विज्ञास्यामः सर्वं ह वो वक्ष्याम इति ॥ प्रश्न० १ २॥

अथोत्तरेण तपसा ब्रह्मचर्येण श्रद्धया विद्ययाऽऽत्मानमन्विष्यादित्यमभिजयन्ते ॥ प्र० १ १०॥

## वेदाध्ययनम्—२

असति ब्रह्मचिन्तने ब्रह्मचर्यसंरक्षणमसम्भवमित्युपन्यस्तम्। तच्चिन्तनमपि वेदाध्ययनमन्तरेण शक्यन्न विज्ञातुम्। वेदा हि प्राचीनतमाः श्रेष्ठतमाश्च विलसन्तितमाम्। "किन्नाम परमात्मस्वरूपत्वं कथञ्च ब्रह्मसाक्षात्कारः स्यात्? ब्रह्मचर्येण तपसा किं फलत्वम्" इति निश्शेषतया प्रश्नकदम्बाः समाधीयन्ते वेदादिविविधशास्त्रपर्यालोचनेनैव। तथाहि भगवति अथर्ववेदे ब्रह्मचर्यलाभार्थं निगदितम्—"ब्रह्मचर्येण तपसा देवा मृत्युमपाघ्नत" इति॥

ननु कथं ब्रह्मचर्येण तपसा जितमृत्युः सम्भवतीति? सन्देहपङ्कमुत्पादयन्त्येके। तदुच्यते—मृत्युर्हि नाम पाञ्चभौतिकस्य कायस्य वियोगः अविद्यास्मितारागद्वेषाभिनिवेशाः पञ्च क्लेशाः अविद्या क्षेत्रमुत्तरेषां प्रसुप्ततनुविच्छिन्नोदाराणाम्॥ योग० २ ३, ४॥ पातञ्जलसूत्राभ्यां मृत्युरविद्यापरिणामोऽभिहितः। ब्रह्मचर्येण तपसा हि सत्त्वपुरुषान्यताख्यातिः सम्पद्यते। तेन सम्यग्ज्ञानेन मृत्युः पराजयते। तथा चात्र तत्रभवतो जितमृत्यून् श्री भीष्मपितामह-दयानन्दभगवत्पादान् उदाहरामहे—ते भवन्त आदित्या ब्रह्मचारिण आसन्।

श्री भीष्मपितामहास्तु मरणासन्ने प्राप्तेऽपि प्राहुः–
धारयिष्याम्यहं प्राणानुत्तरायणकांक्षया ।
ऐश्वर्यभूतः प्राणानामुत्सर्गो हि यतो मम ।।
महा० भीष्म०–अ० ११६.१०६ ।।

तथाहि श्रीमद्दयानन्दचरणा मरणासन्ने काले जितमृत्युत्वादेवमूचुः—हे ईश्वर ! सच्चिदानन्द-स्वरूप ! प्रभो ! तवेच्छा पूर्णा स्यात् । नह्येते ब्रह्मचर्यनिष्ठा श्री भीष्मदयानन्दमहाभागाः, मरणासन्ने काले मृत्युलाञ्छनपङ्कगन्धमप्यनुबभूवुः। तस्माद् अत्र सन्देहावसरप्रसङ्गो नोपपद्यते ।

तथा च वामनाचार्येण वेदाध्ययनशीलो ब्रह्मचारी अभिहित –ब्रह्मवेदस्तदध्ययनार्थं यद् व्रतं तदपि तच्चरतीति ब्रह्मचारी ।। काशिका ६.३.८४ ।।

## वीर्यसंरक्षणम्—३

ब्रह्मचिन्तन – वेदाध्ययनानुष्ठानमन्तरेण नहि वीर्यसंरक्षणं याथातथ्येन सम्भवतीत्यवोचम् वीर्यसंरक्षणमपि ब्रह्मचिन्तनवेदाध्ययनोपलब्धौ साधकतमङ्करणमिह विधीयते । यद्यपि ब्रह्मचिन्तन-वेदाध्ययनवीर्यसंरक्षणानि युगपद् एव विधेयानि सन्तितमाम् । तथापि ब्रह्मचर्यशब्देन लोके वीर्यसंरक्षणमेव वैशिष्ट्येनोपचर्यते । एवं हि कानिचित्प्रमाणानि वीर्यसंरक्षणस्यैव प्रकर्ष प्रदर्शयन्ति । तानिकानिचिद् खलु लिलिखिषामि–ब्रह्मचर्यं गुप्तेन्द्रियस्योपस्थस्यसंयमः।। योगव्यासभाष्ये २ ३०।। अत्रैव भोजेनापि लिखितम् — ब्रह्मचर्यमुपस्थसंयमः ।। भगवता पतञ्जलिना भाषितम्—ब्रह्मचर्यप्रतिष्ठायां वीर्यलाभ ।। योग० २.३८ ।। अत्रोक्तं भोजवृत्तौ—यः किल ब्रह्मचर्यमभ्यस्यति तस्य तत्प्रकर्षान्निरतिशय वीर्यं सामर्थ्यमाविर्भवति । वीर्यनिरोधो हि ब्रह्मचर्यं तस्य प्रकर्षाच्छरीरेन्द्रियमनःसु वीर्यं प्रकर्षमागच्छति ।।

युद्धे ब्रह्मचर्यनिष्ठेनाऽर्जुनेन पराजितस्य गन्धर्वस्योक्ति.—

ब्रह्मचर्यं परो धर्मः स चाऽपि नियतस्त्वयि ।
यस्मात्तस्मादहं पार्थ ! रणेऽस्मिन् विजितस्त्वया ।।
।। महा० आदि० अ० १७० ।।

ब्रह्मचर्यस्य च गुण शृणु त्वं वसुधाधिप !
आजन्ममरणाद्यस्तु ब्रह्मचारी भवेदिह ।।१।।
न तस्य किञ्चिदप्राप्यमिति विद्धि नराधिप ।
बह्व्यः कोट्यस्त्वृषीणां च ब्रह्मलोके वसन्त्युत।।२।।
सत्ये रतानां सततं दान्तानामूर्ध्वरेतसाम् ।
ब्रह्मचर्यं दहेद्राजन् ! सर्वपापान्युपासितम् ।।३।।
महा० विदुर० ३६

कायेन मनसा वाचा सर्वावस्थासु सर्वदा ।
सर्वत्रमैथुनत्यागो ब्रह्मचर्यं प्रचक्षते ।।
स्मरणं कीर्तनं केलिः प्रेक्षणं गुह्यभाषणम् ।
संकल्पोऽध्यवसायश्च क्रियानिष्पत्तिरेव च ।।
एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः ।
विपरीतं ब्रह्मचर्यमेतदेवाष्टलक्षणम् ।।

तदित्थं यौगपद्येन ब्रह्मचिन्तनवेदाध्ययनवीर्यसंरक्षणानुष्ठानेन वयं स्वकीयचित्तस्थाज्ञानं दूरमपसृत्य कैवल्यपथपथिका भवितुमर्हामः । यथैव पुरा देवा ब्रह्मचर्यानुष्ठानेन मृत्युञ्जया बभूवुस्तथैव वयमपि स्याम । ननु प्राक्तनाः प्रेक्षावन्तो मृत्युञ्जयाः सबभूविरे किमत्रमानम् ? इति चेत्तदुच्यते भगवत्यां श्रुत्याम्—

ब्रह्मचर्येण तपसा देवा मृत्युमपाघ्नत ।
इन्द्रो ह ब्रह्मचर्येण देवेभ्यः स्वराभरत् ।।
अथर्ववेदः ११.५.१९।।

# संस्कृतं भारतीयराष्ट्रियता च

डा० रामजी उपाध्याय एम० ए०, डी० लिट्०

भारतस्यैकताद्य वर्तते । सा कथं कदा वा सम्पादितेति विचारे समुपस्थिते सर्वङ्कषो विमर्शो जायते यद्दुरुकमेऽस्मिन् नास्ति तत्राङ्गलाना तेषा भाषाया अनुयायिना वा कृतित्वम्, अपितु तेषा भारते प्रादुर्भावात् प्राक् किमपि तत् तत्त्वमासीत् सुप्रकटितं येन नि सन्दिग्धमिद प्रोक्तम्––

उत्तर यत् समुद्रस्य हिमाद्रेश्चैव दक्षिणम् ।
वर्ष तद् भारत नाम भारती यत्र सन्तति ॥

बहुविधजनाना देशेऽस्मिन् सा भारतीया संस्कृतिर्विकसिता यस्या आदर्शमात्मनीनं कर्तु ते सर्वे जना. परस्पर साहचर्य विदधुरिति भारतीयसंस्कृते प्रतिष्ठाया प्रथम पदम् । इयमेव भारतीयसंस्कृतिर्भारतस्यैकराष्ट्रियत्वमपि विहितवती । वस्तुतस्तु न कश्चिद्देशो भौगोलिकसीमाभीराष्ट्रमिति नामविशेषमर्हति, अपितु केनापि संस्कृतिविशेषेण कस्यचिद् भूभागस्य राष्ट्रसंज्ञेति विशेषो जायते । सा संस्कृति प्रधानत. संस्कृत-साहित्ये गौणत इतरभाषासाहित्येषु च निहिता वर्तते । यदि नाम संस्कृतमपरा भारतीय-भाषा वोपेक्षिता स्यु तर्हि भारतीया संस्कृतिरपि मूलत उच्छिन्ना भविष्यति । फलतो भारतस्य भारतीयतापि विनष्टा जायेत । आंग्लभाषाद्वारेण या अस्ता राष्ट्रियसंस्कृति. प्रचार्यते, तस्याश्चाकचक्येन भारतीयां संस्कृतिं विनाशयितुमेवाङ्गलभाषासमर्थकाना पक्ष: प्रवर्तते ।

स्वकीया राजनीतिकी वा सामाजिकी वा संस्कृति. परेषु देशेषु स्थिरं पदं निदध्यादिति आधुनिकयुगे सर्वेषां प्रबलराष्ट्राणां परमोद्योगो वर्तते । इदमेवोद्दिश्य इङ्गलैण्ड-अमेरिका-जर्मनी-रूसादिदेशाना न केवल सार्वजनिकसंस्था अपितु शासनसंस्था अपि भारतदेशे स्वल्पमूल्येनोत्कृष्टं साहित्य विक्रीणन्ति, भारतीयविद्यार्थिना स्वकीयेषु देशेषु अध्ययनार्थं समृद्धा छात्रवृत्तिमुपहरन्ति, स्वकीयदेशस्य भाषा-संस्कृतीतिहासादीना विषयाणामध्यापनार्थं प्राध्यापकान् नियोजयन्ति । 'फोर्ड फाउण्डेशन' इति विख्याता संस्था तदेवोद्देश्यं परम कृत्वा प्रपञ्चिता ।

राष्ट्रभाषाद्वारेण राष्ट्रिया संस्कृतिः संस्थापनीया यतो नाम राष्ट्रियसंस्कृतिं विना राष्ट्रस्य राजनीतिकमेकत्वमपि स्वप्नसृष्टिर्भविष्यति, भारतस्य विघटनमवश्य भविता च । सा राष्ट्रिया संस्कृति केवलं भारतीयभाषासु सन्निहिता वर्तते । अतएव तासा सर्वासां भाषाणामध्ययनाध्यापनं सविशेषं व्यवस्थापनीयम् । अधुना तासु केवलं संस्कृतस्य माहात्म्यं भारते सर्वत्र राजते । सा भाषा सर्वासां भारतीयभाषाणा जननीरूपेण वा सहचरीरूपेण वा समादृता । अस्माकं राष्ट्रियसाहित्य प्राचीनकालतोऽद्यावधि सविशेषं संस्कृतभाषायामेव वर्तते । नातः परं किमपि सत्यम् । हिन्दीभाषायामन्यासु वा भारतीयभाषासु सन्ति नामाङ्गुलिगणनीया एव राष्ट्रिय-साहित्य-कक्षायोग्या ग्रन्थाः, अथ च शतशो ग्रन्था वेदोपनिषद्रामायण-महाभारतपुराणादय., अन्ये वा बहुविधविषय-स्पृशो महाकवीनामाचार्याणा च संस्कृतग्रन्था राष्ट्रिय-साहित्य-कोटिमवगाहन्ते । न केवलं भारतीयभाषासु भाविसाहित्यस्य निर्माणार्थमपितु भारतमिति नाम्न सार्थकतां विधातुमपि संस्कृतभाषाया राष्ट्रियं साहित्य महनीयम् ।

आंगलभाषाया अनिवार्यमध्यापनं तु दुराग्रह एव, यतो नाम कापि वैदेशिकी भाषा कस्मिंश्चित् स्वतन्त्रदेशेऽनिवार्यरूपेण न ध्रियते । आंग्लभाषा तु केवलं तैर्जनैः पठनीया ये अन्ताराष्ट्रियज्ञान-विज्ञान समुपासका अन्ताराष्ट्रिया ख्याति लब्धु सुमुत्सुका सन्ति ।

आंग्लभाषा तु भारतीय-संस्कृते प्रोच्चाटिनी वर्तते । यदि नाम आंग्लभाषाया भारते सर्वोपरि स्थानं क्रियते, तर्हि तएवाङ्गल-साहित्य-संस्कृति-रंजिता जना देशेऽस्मिन् प्रामुख्य भक्ष्यन्ते, येषामा-दर्शेन साहचर्येण च वैदेशिकी संस्कृतिर्देशेऽस्मिन् सनातनपदं लप्स्यते । सा स्थितिस्तु भारतस्य भारतीयतामेवाचिरं निराकुर्यात् ।

## सदोद्यमः किं न करोति भद्रम् बाल्ये समायान्ति गुणा वशित्वम्

लेखक.–वैद्य श्री रामस्वरूप शास्त्री, संपादकः, बालसंस्कृतम्, बम्बई ७७

उद्योगशीलस्य भवन्ति कामाः
उद्योगशीलस्य भवन्ति चार्थाः ।
उद्योगशीलं समुपैति सिद्धि
उद्योगशीलो लभते प्रतिष्ठाम् ।।

उद्योगशीलस्य नरस्य नूनं
न दुर्लभ किञ्चदसंभव वा ।
क्रियाविधिज्ञस्य च तस्य लोके
यशांसि कार्याणि च यान्ति वृद्धिम् ।

तिलेषु तैल भवतीति सर्वो
जानाति तच्चापिविना प्रयत्नैः ।
लभ्य न तस्मान्मतिमान् सदैव
मुक्त्वालस विन्दति कार्यसिद्धिम् ।।

न पौरुषं यस्य नरस्य विद्यते
क्व तस्य साफल्यमुपैति पार्श्वम् ।
मनोरथास्तस्य भवन्ति मोघाः
सर्वाणि सौख्यानि च यान्ति नाशम् ।।

कीर्ति प्रसूते विदधाति सौख्यं
तनोति मान वितनोति सख्यम् ।
ददाति धैर्यं विदधाति सिद्धि
सदोद्यमः किं न करोति भद्रम् ।।

स्वस्थोऽसि वीरोऽसि वरोऽसि धीरः
हेबाल! जातोऽसि कुरुष्व कार्यम् ।
अधीष्व विद्याः विविधाः कलाश्च
बाल्ये समायान्ति गुणा वशित्वम् ।।

भाषस्व सत्यं वचन सदैव
चक्षस्व चेष्टं मधुरं च नित्यम् ।
वर्तस्व पित्रोर्वचनेषु सम्यक्
बाल्ये समायान्ति गुणा वशित्वम् ।।

वचो गुरूणां प्रतिपालयस्व
पुण्यानि कार्याणि कुरुष्व नित्यम् ।
सदैव दीनेषु दयां कुरुष्व
बाल्ये समायान्ति गुणा महत्वम् ।।

मित्रेषु नीतिं परमां पवित्रा
विधेहि सर्वेषु जनेषु मैत्रीम् ।
विश्वासपात्रो भव सज्जनानां
बाल्ये समायान्ति गुणा वशित्वम् ।।

सेवस्व धर्मं वद संस्कृत च
यतस्व लोकस्य हिताय नित्यम् ।
भजस्व भक्ति परमेश्वरे च
बाल्ये समायान्ति गुणा वशित्वम् ।।

★★

# नीहारकालः ( ऋतुश्रृङ्गारात् )

श्री बुद्धदेवः

ब्रह्माण्डभाण्डे हिमखण्डचन्द्र-
ज्योत्स्नां गलन्तीं वसुधासुधाराम् ।
स्वलोचनाभ्यां गरलज्वलन्तीं
न पातुकामो निशि विप्रवासी ।।१।।

लहरफणिमणीनां शीतलैर्लोलमालै-
र्निशि निशि तटिनीनां दीपकैश्चारुरूपम् ।
कमलमुकुलपाणिर्लोकयन् विप्रवासी
हृदयतिमिरमन्ध हन्ति वान्तं निजान्त. ।।२।।

पश्चाच्च दृष्ट्वा चरमाचलाले-
मेंघान्धकारं सघन समुत्थम् ।
भ्रान्त. कथं दुर्दिनमेति भूयो
विभावरीभीरुरय प्रवासी ।।३।।

प्रातः प्रवासिन् चटकायमान
कुलं दलानां वसुधारुहाणाम् ।
मध्यान्हकाले च शुकायमान
दिनावसाने च पिकायमानम् ।।४।।

तमस्तमालावलिरस्तशैला-
च्छायां जगत्यामुपरि प्रतूर्णम् ।
आत्मानुरूपां तनुते विशालां
धूमाकुलाभां शिशिरे निशायाम् ।।५।।

तमोतमो वान्तमुष प्रकाश-
धाराप्रवाहे ध्रुवमानिमग्नम् ।
विभाति गङ्गायमुनातरङ्ग-
सङ्गः प्रयागः प्रतिवासरादौ ।।६।।

सरागा परागापरागालिरद्य
प्रभाते यथेयं सुमानां समुत्था
नवीनप्रतीति सुदिव्यांविभाव्य
स विस्मृत्य बन्धुं क्षणं याति मोदम् ।।७।।

प्रभातवातेरितपुष्पपत्रं
यथोत्पतच्चित्रपतङ्गपत्रम् ।
नीराजनादीपशिखासमानां
दीप्रप्रभा सूर्यमुखीदलानाम् ।।८।।

कृष्णोत्तमाङ्गाम्बरचारुदेशे
तां चन्द्रमश्चन्दनचित्रकाभाम् ।
विलोक्य लोकोऽजनि दर्शनेप्सु-
र्भक्त्या प्रसन्नामिव शुभ्रदीप्राम् ॥६॥

सन्ध्यातिमन्ददिवसेश्वरभासि
कोलाहले च विरले विपुलद्विजानाम् ।
भीत्या पिरेमिडनगाद् विरहो सरन्तीं
रेल्वाहिनीं शतपदीमिव वीक्षमाण ॥१०॥

निर्मोकतुल्यं पुलिनं विशालं
व्यालीव हित्वा नवला नदी या ।
विलोक्य तां सकुचितां चलन्तीं
मा भूभिया कूर्ममनाः प्रवासिन् ॥११॥

शिवालकालिस्तपसा पिशङ्गी
या पूर्वमासीच्छिशिरेऽधुना सा ।
तुषारशुभ्रा द्युमणिप्रदीप्रा
सुवर्णवर्णा पलितेव जाता ॥१२॥

पश्चात् प्रदोषात् ककुभो विरूढ-
तमस्तमग्रन्थिनिकुञ्जपुञ्जाः ।
पाण्डुप्रभा भूर्भवतीव यत्र
प्रवासकाले वसति प्रवासी ॥१३॥

आकाशनीकाशशिरोदशाशा-
वेणीनिशाश्यामलकेशराशौ ।
दुकूलसूत्रप्रथमोज्ज्वलांशुः
प्रवासिनः श भवतु प्रभाते ॥१४॥

कपाटखट्खट्करणेनदीष्णा
मन्दं प्रभाते वह गन्धवाह ।
तूष्णीं विहङ्गा विटपेषु सन्तु
सद्यःशयानः शिशिरे प्रवासी ॥१५॥

'गताङ्कतोऽग्रे--

# साधना (२)

श्री सत्येन्द्र बाबुकृतसाधनाया अनुवादको महाकविरामकृष्णभट्ट 'हिन्दु कालिज' दिल्लीविश्वविद्यालय'

## तृतीयः परिच्छेदः

महाधिकारी कतिपयारक्षिकांस्तद्गृहसङ्गोपने नियुज्य निकटवर्तिनस्त्रिभूमिकस्य सौधस्योपगम्य द्वारदेश भेदयित्वा च तत्कवाटर्गलं सार्धं सर्वं रक्षिदन्त । प्रविष्टमात्रश्च स तस्मिन्गेहे बहोः कालान्न कोऽपि न्यवसदित्यवाबुध्यत । सर्वस्मिन्नपि प्रकोष्ठे हि जानुदघ्नं पांसुपटलमवस्करनिकरश्च प्रक्षिप्त आसीत् । आगताः सर्वेऽपि गृहस्य निपुणं पर्यैक्षन्त सर्वान्विभागान् । सर्वत्रापि दशा समानैव । तस्य प्रथमयोर्द्वयोरपि भूमिकयोरेवमेव पांस्ववस्करनिचयो राशीकृत इवावर्तत । तृतीयभूमिकायां तु सोपानप्रकोष्ठस्य निकटे किञ्चिदल्पमपवरकमासीत् । तत्र च कश्चिदल्पो गवाक्षः । आरक्षिकमहाधिकारी तद्गवाक्षकवाटमुद्घाट्य परीक्ष्य चाब्रवीत्–"यस्मिन्नेकभूमिकभवनस्य प्रकोष्ठे नार्या हत्या कृता तदस्माद् गवाक्षात्सुष्ठु गोचरीभवति दृशोः । अल्पपदवीतो यद्यग्निनलिका न प्रयुक्ता तर्ह्येतत्प्रकोष्ठमागतेन नारीं लक्ष्यीकृत्य सा प्रयुक्ता ध्रुवम्" इति । तदाकर्ण्याधिकारी खानमहाशयोऽभाषत–"गृहस्यास्य पूर्वद्वार पिहितमर्गलितञ्च । तस्मान्न कस्याप्यन्तःप्रवेष्टुमासीन्मार्गः" इति । तदा महाधिकारी "उपायान्तरेण तेनागतेन भवितव्यम् । मणिमहाशयाः, किं भवन्तो ब्रुवन्ति ?" इत्यपृच्छत् । तदैव मणिमहाभागस्तत्र नासीदिति प्रबोधः सर्वेषां जात. । महाधिकारी च तस्याह्वानाय विसृज्य दूतान् "गच्छत, गृहमेतत्प्रवेष्टुमन्यः कोऽपि विद्यते वा मार्ग इति परीक्षामहे" इत्यवादीत् ।

गृहे विद्यमानानि ते सर्वाण्युद्घाट्य वातायनानि ते पर्यैक्षन्त । सर्वाण्यपि दृढमायसकीलेनासन् पिहितानि । पुरोद्वारं वर्जयित्वा तत्र प्रवेशाय नान्यः पन्था कोऽप्यायासीद् दृष्टिपथम् । तदाधिकारी चावदन्महाधिकारिणम्–"स्वामिनः, अल्पपदवीत एव केनापि नार्यावग्निनलिकया प्रहृते इति तर्कयामि" इति । "साम्प्रत तावत्तथैव कथनीयम् । क्व मणिमहाशया.' "इत्यभणन्महानधिकारी ।

तदा मणिमहाशयस्तृतीयभूमिकाया अल्पप्रकोष्ठं तत्परिसरञ्च सम्यक् परीक्षमाणस्तत्र पतितं दृष्ट्वा किञ्चित्पत्रखण्डमुद्धृत्य निजकञ्चुककोशे दृढं समगोप्सीत् । तत्रान्तरे "महास्वामिनो मन्मुखान्तरित वदन्ति भवन्त स्वप्रणामम्" इत्यागत्य कथितवन्तं कंचनारक्षिकं स "भद्र गच्छाग्रत" इत्युक्त्वाऽवातरत्तः । त च वीक्ष्य महाधिकारी "पुरोद्वारं विहायैतद्गृहप्रवेशायाऽसति मार्गान्तरे, प्रतिभात्यल्पपदवीत एवाग्निनलिकाप्रयोगः कृत इति । किमाहुर्भवन्तः" इत्यपृच्छत् ।

मणिम :––"भवदुक्तमेकदेशेनाभ्युपगन्तव्यं भवेत् । तथापि दिवसेऽल्पपदव्यां तिष्ठन्को वा नलिकाप्रयोगं कर्तुं मनः कुर्यात् ? तावद्धैर्यं कस्यनु स्यात् ? अपि च, नलिकाशब्दश्रवणमात्रेणैव सम्मिलिता अत्र सर्वेऽप्यस्या अल्पपदव्या उभाभ्यां पार्श्वाभ्यां धावन्तः समागतास्तत्र न कंचित्स्थितमद्राक्षुरिति तु स्फुटमेव ।"

खानम :––(साकूतम्) "तर्हि मणिमहाशयाभिप्रायेण केनाप्याकाशसचारिणाऽग्निगोलकः प्रयुक्त इति भाति ।"

तच्छ्रुत्वा महाधिकारी "अल्पपदवीतोऽग्निगोलकः प्रयुक्तो भवेदाहोस्विदेतद्भुवनोपरिष्टाद्गवाक्षाद्" इत्यगदत् ।

खानम :—"क्षम्यतां मम धार्ष्ट्यम् । पूर्वद्वारावृते गृहमेतत्प्रवेष्टुं नान्यद्वर्तते वर्त्म ।"

महाधि :—"तत्तु स्फुटमेव ।"

मणिम .—"एतां कर्तुं हत्यां कुतस्तेन घातुकेन नक्तमेव द्वारमुद्घाट्य नागतेन भाव्यम् ?"

खान .—(विहस्य) "अन्तःप्रविष्टेन बहिर्द्वारं पिधाय कीलितमिति खलु कथयन्ति भवन्तः?"

मणिम :—"तेन साकं कुतोऽन्यो न समायात स्यात् ?"

तदा खानमहाशय. साकूतेन विकटहासेन निजस्वामिनं प्रति परिवृत्य "स्वामिनः, एतेऽस्मानमेधसो गर्दभान् कर्तुं प्रयतन्ते" इति व्याहरत् । महाँस्तु गम्भीरेणावदत्स्वरेण–"सर्वमपि प्रकोष्ठमस्माभिर्निपुण सर्वैः परीक्षितम् । तथापि न कोऽपि तत्र दृष्टिपथमागतः "इति ।

मणिम .—"भवन्तोऽपि भणन्ति भूतार्थम् । अत एव मया पूर्वमेवोक्तम् एतद्रहस्यमेवनमतिदुष्करमिति ।"

खान :—"तर्हि भवन्मतेनैकस्मिन् गृह प्रविष्टेऽन्येन बहिःस्थितेन द्वारं पिधाय कीलितमिति निर्धारणीयं न भवति किम् ?"

मणिम :—"को दोषस्तादृशेऽभिप्राये ?"

एतच्छ्रुत्वा खानमहाभाग उच्चैस्तरामट्टहासं कृत्वाऽवदत्–"भवद्वाक्यं श्रुत्वा वयमपि हासमुखरा भवामः" इति ।

मणिम .—"किमत्र कारणं हासस्य ?"

खान :—रात्रावागतयोर्द्वयोरेकस्मिन्नन्तःप्रविष्टेऽन्येन द्वारं बहिरर्गलेन दृढीकृतमिति भवन्तोऽभिप्रयन्ति । अस्तु नाम । तदङ्गीकुर्मः ।"

मणि :—"किं नाम भवन्तो नाङ्गीकुर्वन्ति ?"

खान .—"अन्तरवस्थितेनाग्निनलिकायां प्रयुक्तमात्रायां जनेषु निर्घोषं निशम्य क्षिप्रं प्रधाव्यागतेष्वपि द्वार कीलितमासीत्खलु । तत्र सम्मिलितो जनानिकरो न कमपि बहिरागच्छन्तमद्राक्षीच्च । तस्मादन्तरवस्थित किमु तत्रैवास्ते ?"

मणि .—"स्यात् कुतो न ?"

महाधि :—"यद्युभे अपि नार्यावभिज्ञाते तर्हि हत्याकारी क इति ज्ञातुं सुशकम् ।"

मणि —"ते उभे अपि कदा केन प्रकारेण गृहमेतं समायाते इति न कोऽपि जानाति ग्रामवास्तव्य. । न कस्याप्यत्रत्येषु ते परिचिते च ।"

महाधि .—"यदि तरुणी मूर्च्छावस्थामतिक्रम्य सञ्ज्ञा प्रतिलभते तर्हि सा कथयेत्सर्वं वृत्तान्तम् । हस्ते गृहीत्वा कौक्षेयकं समक्ष स्थितां ता नारीं विलोक्य सा भयेन मूर्च्छामापदिति तर्क्यते ।"

मणि :—"नैषा तादृशी मूर्च्छा । तस्यां मूर्च्छापादक औषधद्रवः प्रयुक्तः ।"

अनेन वाक्येन चित्रीयमाणचेता महाधिकारी तमपृच्छत्–"कथमिद भवद्भिरवगतम्?" इति

मणि —"गन्धेन ।"

महाधि .—"गन्धेन । आम् । मयाऽपि कोऽपि गन्ध आघ्रात । आस्तां तावत्सा कथा अनेन समयेन तस्या स्मृति. प्रत्यागता भवेत् एवञ्चेत्सा सर्वमुदन्त यथावद्वर्णयितुं शक्ष्यति

मणि :—"तस्य सम्भाव्यता नास्ति ।"

महाधि .—कुतो न ?"

मणि :—सा तरुणी अन्धा बधिरा मूका च ।

## चतुर्थः परिच्छेदः

अधिकारी तूच्चैस्तरां प्राक्रमत हसितुम् तद्विलोक्येतरेऽपि मन्दहासविकसितवदना अभूवन् महाधिकारिणि पुन. केवलं सभ्रूभङ्गमवलोकयत्यधिकारिणो हास एकपद एव व्यरंसीत् । तदो-

तमोऽवदज्जघन्यम्–"नान्यद्विचारणीयमत्र विद्यते किमपि । इमौ गेहौ गोप्तृद्वाराऽवेक्षणीयौ । त्वदधिकारक्षेत्रे दिने सर्वविदिता हत्याऽऽचरिता । तस्या विचयनं तव कर्तव्यम् । त्वमेवास्य प्रतिभूरसि" इति । तदा खानमहाशयेन शीर्षं कण्डूयमानेन "स्वामिनः · · · · ·" इत्यर्धोक्ते,

"अन्यैर्वचनैर्न क्षपयामि कालम् ।"

"स्वामिन , मणिमहाशयाः · · · · ·"

"मणिमहाशया नारक्षिकाणां दासा ।"

"नाहं तद्वदामि । यदुक्तमनेन महाभागेन तत्सर्वं व्यूहविलसितमेव ।"

"तेन तव कि कार्यम् ? त्वया तावन्निजकर्मानुष्ठेयम्" इत्येवमुक्त्वा महाधिकारी गृहाद् बहिरागत्य पुनरप्यधिकारिणम्, "अत्र करणीयं सर्वमपि परिसमाप्य चिकित्सालये त्वयाहं द्रष्टव्यः इत्यादिश्य मणिमहाभागं प्रति" आगम्यताम् । गच्छाव " इति वदंस्तेन साकं रथमारुह्य प्रस्थित ।

तदनन्तरं खानमहाशयो निवारणबाबुप्रभृतीनवोचत्–"स बालिशो युवास्मन्महाधिकारिणो विमोहयति बुद्धिम्" इति ।

निवारण —मा मैवम् । सर्वे विदुर्मणिमहाभागस्य विचयने प्रसिद्धां परां नैपुणीम् ।

खान :—सर्वं केवलमभ्यूहप्रपंचपौरुषम् । न किमपि कार्यक्षममत्र ।

निवारण :—अस्माकीना पुनः सम्भावनाऽन्यविधा ।

खान :—युष्माकं भावना ह्यसती ।

निवारण :—ननु भवेत् । एतादृशेषु विषयेषु भवन्तो भूरिपरिचयाः स्युः ।

इत्येवमुक्त्वा निवारणबाबुर्निरगच्छत् । तेन सार्धमितरे शिष्टा निर्गताः । क्रमेण च जनसंमर्दोऽप्यभजद्विरलताम् । अधिकारी च करणीय गृहयोः सङ्गोपनमारचय्य चिकित्सागार प्रत्ययासीत् ।

मणिमहाशयस्य दर्शनं प्रायेण नारीचतारक्षिकेभ्य । अस्य कारण वर्तत एव । मणीन्द्रबाबोर्जनको रायमहाशयो बहून्वत्सरान् आग्रानगरे कार्यमाचरन् प्रायः आग्राभिजन एवाभूत् । तेन च वित्तमार्जितं प्रभूतम् । तस्य जाया मणीन्द्रस्य शैशव एव मृत्युदेवतया कवलिता । रायमहाशयोऽपि तत प्रभृति परिग्रहरहित एवासीत् । मणीन्द्रोऽपि तस्यानर्घो मणिरेवासीत् । महता स वित्तव्ययेन पुत्र गृह एव विविधविद्यासु पारदृश्वानमकार्षीद् गुरुभि । स्वप्रयत्नेन च मणीन्द्रः परां प्रौढिमध्यरुक्षद्विद्यासु । तस्य वयस्तावत्पञ्चविंशतिमितम् ।

वर्षद्वयं मणीन्द्रजनकस्य दिवं प्रयातस्य । तस्य पीनो धनराशिः सर्वोऽपि मणीन्द्रहस्ताभ्याशमागतः । स मणीन्द्र परोपकारगृध्नुस्तदर्थं कुरुते स्मानल्पं धनव्ययम् । आग्रानिवासिनोऽपि सर्वे त बहु सम्भावयन्ति स्म । केवलमारक्षिकाणां समजनि तद्दर्शनेनामर्षप्रकर्षः । वत्सरात्पूर्वं कस्यचित्तत्सुहृदो गेहे विचित्रं किञ्चिदभूच्चौर्यकृत्यम् । तत्रारक्षिका नापारयन्किमपि कर्तुम् । तदा मणीन्द्रः स्वयमेव महता प्रयत्नेन चोरान्विचित्य चोरितद्रव्येण सहारक्षिकेभ्य आर्पयत् । तत आरक्ष्यारक्षिकमहाधिकारिणो निरतिशयविश्वासादरभाजनमभून्मणीन्द्रः । तयोर्मैत्री च शुक्लपक्षे शशिकलेवोपाचीयत । महत्सु व्यवहारेषु च महाधिकारी मणीन्द्रस्य प्रज्ञासाचिव्येन व्यधत्त कार्याणि । तस्मिन् हायने मणिमहाशयो बहुषु व्यवहारेषु विश्वप्रनकर्मण्यद्भुत प्राचीकटत्सामर्थ्यम् । अत एव स आरक्षिकाणामक्षिगतो जातः । यतः स विषये विषये चारक्षिकाणामन्याय्यतां बालिशतां चान्तरेण जनानकरोद्विदितार्थान् । अत एव कुप्यन्ति स्म ते तस्मै ।

महाधिकारिणि मणीन्द्रेण सार्धं चिकित्सालयं गत्वा परीक्षमाणे मणीन्द्रस्य पूर्वोक्तं वचनमवितथमभूत् । तरुणी चापगतमूर्च्छा समजायत । तदा तत्रत्यो भिषगभाषत–"यद्येका घटिका व्यत्यैष्यत् तर्हि बालाया मरणं ध्रुवमभविष्यत् । प्रायस्त्रिंशद्घटिकाभ्यः पूर्वं केनापि मूर्च्छापादकौषधप्रवेशनास्याः संज्ञाऽपहृता । तदौषधं च न सकृदेव प्रयुक्तम् । वारं वारं व्यापारितं तत् । तस्य प्रयोक्त्रा च निपुणेन भवितव्यं भिषजा । अधिगतसामान्यज्ञानेन तु न तथा शक्य प्रयोक्तुम्" इति ।

महाधि :—अधुना एका घण्टा । अतो रात्रावेकघण्टासमये तदौषधप्रयोगस्यारम्भः स्यात् ।

"आम्, तदैव प्रारब्धम् । ततः प्रतिनाडिक तद्व्यापारितं स्यात् ।"

"तर्हि किं तत्रान्येऽप्यासन् ?"

"अथ किम् ।"

"तत्र कस्याश्चिन्नार्या विहाय शवं न कोऽप्यासीदन्यो जन्तु ।"

"नैतत्साहसं कर्तुं शक्य नार्या । तत्रान्येनावश्य स्थितेन भाव्य पुंसा ।"

महाधिकारी प्रैक्षत मुखं मणिमहाशयस्य । मणीन्द्रस्तु तूष्णिमतिष्ठत् ।

वैद्यः—अस्यास्तरुण्यास्सकाशान्न कोऽपि निष्कामेदुदन्तः ।

"कुतो न ? अप्यसौ न जानाति किञ्चित् ?

"न हि, न हि । जानत्यपि न ब्रूयाद् भाग्यवञ्चिता । रूपे त्वद्वितीयमस्याः सौन्दर्यम् । न क्वापीदृश दृष्टचरं स्यात्सौन्दर्यं केनापि । अन्धा चेय बाला । अपि च बधिरा मूका च ।"

महाधिकारी चिन्ताविग्रथितेन्द्रिय इव व्यापारितवान्मणीन्द्रस्य वदने दृष्टिम् । तेन हि पूर्वमेवेयं प्रवृत्तिर्निवेदिता खलु ।

(शिष्टमागामिन्यङ्के)

## गुरुकुल-पत्रिका-विरयाम्

| | |
|---|---|
| १ प्रकाशनस्थानम्— | कांगड़ी गुरुकुलम् |
| २ प्रकाशन कदा भवति— | मासिकी पत्रिका |
| ३ स्वामिनी समितिः— | गुरुकुल कांगड़ी विश्वविद्यालयस्य विद्यासभा |
| ४ सम्पादकस्य नामधेयम्— | श्री भगवद्दत्तो वेदालकारः |
| राष्ट्रियता— | भारतीयः |
| संकेत— | कांगड़ी गुरुकुलम् |
| ५ प्रकाशकस्य नामधेयम्— | श्री धर्मपालो विद्यालकारः |
| राष्ट्रियता— | भारतीयः |
| ६ मुद्रकस्य नामधेयम्— | श्री जी० आर० पाल महोदयः |
| राष्ट्रियता— | भारतीय. |

अहं धर्मपालविद्यालंकारो घोषयामि यदुपरिलिखितं विवरणं मदीयज्ञानविश्वासानुसार यथार्थं वर्तते ।

ह० धर्मपालो विद्यालकारः
गुरुकुल-पत्रिका-प्रकाशकः

# सम्पादकीयटिप्पण्यः

## भारतवर्षस्य वर्तमान दशा

कुत इयं साम्प्रतिकी दुरवस्था भारतवर्षस्य कुतश्चायं जनसंक्षोभ सर्वत्रोग्ररूपेण दरीदृश्यते। यदि रहसि शान्तेन मनसोपविश्य सुगूढं विचारयेम तन्मानसाम्बुधेः संक्षोभजनका नैके भावकल्लोला उच्छलितुं प्रारभन्ते। संक्षेपतस्तदिद वक्तुं शक्यते यच्छासनसूत्रं शिथिलं विद्यते। गान्धिसदृशो न कोऽप्येतादृशो महापुरुषोऽस्माक मध्येऽवशिष्टो योऽखिलं राष्ट्रमेकशासनसूत्रतायामाबद्धु प्रभवेत्। अद्य ये नेतार. सन्ति ते प्राय. सत्साहसशून्या. [illegible]लोके च विचरन्ति। अपरञ्च हिन्दुषु तु धर्मनिरपेक्षताव्याजेनाधर्म एव प्रवृद्धोऽभूत्। भौतिकतायाश्चाकचक्येऽन्धीभूताः स्वधर्मं स्वसंस्कृतिं च व्यस्मरन्। ये चान्ये मुस्लिमईसाईवर्गास्ते भारतभुवं मातृरूपेणानङ्गीकुर्वाणाः राष्ट्रियपर्वासरे हर्षमप्रकटयन्तो राष्ट्रं प्रत्यननुरक्ता महाव्याधिरूपेण महाकुष्ठइव भारतभूत्वचि सर्वत्र प्रसृताः सन्ति। अस्य परिणामोऽय यद् यदाकदा कश्चिद् दानवोऽभिवाञ्छति तदैव साम्प्रदायिकसंघर्षो वर्गविद्वेषश्च समुत्तिष्ठतः। यतो ह्यत्र सर्वे समानाः सन्ति। पाकिस्ताने तु न कदाप्यसौ श्रूयते। एवमेव यावदत्राप्येकस्य वर्गविशेषस्य प्रामुख्यं न [illegible]करिष्यते तावत् काश्मीररांचीमेरठादि महाकुष्ठीयप्रदेशेषु शान्तेराशा दुराशामात्रमेव। तत्र तु मार्शल्लाकर्फ्यु-प्रादि प्रचण्डास्त्राणामावश्यकता भविष्यत्येव। अन्यच्च स्वतन्त्रतावाप्तिसमये वाङ्मात्रेण न तु सत्यहृदयेन समुद्घोषितं यद् भारतवर्षस्य राष्ट्रभाषा हिन्दी भविष्यति तदानीं भारतीयरथस्य वोढा श्रीजवाहरलाल आसीत् स चाङ्गलभाषाभक्त.। ततोऽप्यधिकमसमीक्ष्य कृतं कार्यमिदमासीत् यद् ब्रिटिशशासनसमयादागता 'ग्रौफिसर' इति ख्याताः कर्मचारिणो ये बाधारूपेण मध्ये समापतितास्ते न दूरीकृताः। तस्मिन् समये बलवत्प्रभुत्वमापन्नेषु गान्धिजवाहरसरदारादिधुर्वहेषु भारताभिजनानां जनानां परमानुरक्तिरासीत् तदानीं यदि सत्येन मनसा पूर्णरूपेण हिन्दीभाषा राष्ट्रभाषापदे प्रतिष्ठापिता अभविष्यत् तदा हिन्दी हिन्दतीरप्रदेशानां समस्यतामपि नागमिष्यत्। आंग्लानां भारतपदार्पणादारभ्याद्ययावत् प्रतिशतं द्वौ पुरुषावाङ्गलभाषाभिज्ञौ स्तः परं तावपि तद्भाषायाः पाण्डित्यं न वहतः। तथापि तत्रापि दक्षिणभारतीया हिन्दीभाषाया विरोधकरणाय हिन्दीप्रदेशेषु चांगलभाषायाः पुन प्रतिष्ठापनाय केन्द्रीयसर्वकारसम्बद्ध सम्पत्तेर्विनाशं विदधति। असमराज्ये असमबाह्यजनानां केवलं हिन्दूनामेव सम्पत्ते लुंण्ठनभग्निदाहश्च। बंगप्रान्ते च उद्योगानामुच्चाटनमुद्योगपतीनां च 'घेरावाः' जायन्ते। एवं दस्युभिः क्रियासमभिहारेण चङ्क्रम्यमाणान् देशस्य परिधिस्थितान् भूप्रदेशान विलोक्यापि शासनधूर्वहाणां क्लीबत्वं किंकर्तव्यविमूढता वा नाम्बर हृदयस्य साकल्येन जहाति। अहो! दु.खमिदं यद् राजनीतिकदलानां केशाकेशि दण्डादण्डि शतरंजायितमिवायोजनं च सततं वरिवर्ति, इति श्रूयते वृत्तपत्रेषु च पठ्यते।

—o—

# साहित्य-समीक्षा

## ऋग्वेदादि भाष्यभूमिका

श्रीमद्दयानन्दसरस्वती स्वामिना निर्मिता, संस्कृतार्यभाषाभ्यां समन्विता । तस्या इद भारत-भूषण-स्मृति संस्करणम् । सम्पादकः श्री पं. युधिष्ठिरमीमांसकः, प्रकाशक —मन्त्री, श्री रामलाल कपूर ट्रस्ट, अमृतसर । मूल्यम् १२) ।

अत्यन्तमेकान्तञ्च निर्भ्रान्तस्वरूपं तस्य भगवतः परमपुरुषस्यैवेति मन्यन्ते सूक्ष्मेक्षिकया तदधिगतस्वरूपाः परमर्षयः । तं विहायान्ये ये प्रबुद्धात्मानो जीवा ब्रह्मत्वकोटिमापन्ना अपि तस्मादधस्तनसीमायामेवापतन्तीति ब्रुवते परमयोगिनः स्वामिदयानन्दसरस्वतीमहाभागा अपि। अतस्तेषां महर्षिमुख्यानां मन्तव्याद् विभिन्नमतं मन्त्राणां श्लोकादिकानाञ्च व्याख्यानात् भिन्नं व्याख्यानं विपरीतता वा भवितुमर्हति भवत्येव च जगतीति निसर्गसिद्धमिद तथ्यम् । नात्र किञ्चिद्वैचित्र्यं पापं वा पश्यामो वयम् । यजुर्वेदवृक्षस्य कृष्णशाखातो मैत्रायणीकठकपिष्ठलादिशाखान्तराणि समुद्गतानि यतो हि परिवर्तनापेक्षिणो मानवप्रकृतिः । परमधुनातनं समयमवलोक्य विचारणीयमेतद् यत् कस्यापि लेखकस्य ग्रन्थेषु परिवर्तन परिवधन वा विधातव्य न वा । अस्मन्मते सामान्यलेखकस्य ग्रन्थेषु परिवर्तन भवतु न वा भवतु न तत्र कार्ऽपिहानिर्यतो हि किञ्चित् कालानन्तर तेऽभिनवविचाराब्धिकल्लोलेषु विचारप्रवाहापूरेषु वा स्वयमेव विलयं यास्यन्ति । परं लोकोत्तरचमत्कारिपुरुषस्य युगप्रवर्तकस्य धर्मोद्धारकस्य च ग्रन्थानां तात्कालिकसमाजस्योपरि महान् प्रभावो भवति । तत्र परिवर्तनं परिवर्धनं वा न कोऽपि सामान्यजनानुयायिवर्गो मर्षयिष्यति । अतः सामान्यतस्तत्र परिवर्तनं तु विधातव्यमेव न । परं यदि तत्र विद्वद्वकरणीयाऽन्यकृतावाऽशुद्धिः प्रतीयेत तस्याः परिमार्जन स्ववश्य कर्तव्यम् । अनया दृष्ट्या परोपकारिसभायाः सार्वदेशिकसभाया वा तत्त्वावधाने सम्मिल्यार्यसामाजिकविद्वद्भिर्नेतृवर्गैश्च विचारणीयमेतद् यत् स्वामिग्रन्थेषु कुत्र लेखकपण्डितानां प्रमादवशात् शैथिल्यादविज्ञातकारणाच्च दोषा समापतिता.,कुत्र मुद्रणदोषा , कुत्र च संकेतस्थलानामशुद्धयः । एवमन्यान्यपि बहून्यशुद्धिकारणानि सम्भवन्ति तान्यखिलानि संशोधनीयान्येवेत्यस्माकं दृढो विश्वास. । ऊहशस्त्रं व्याकरणादिक च सधार्याण्येषां संशोधकानामुपरि प्रहारो न शोभाकरो न च ग्रन्थान्तर्गताशुद्धीनां संरक्षण कथमप्युचितमिति मन्यामहे वयम्। तत्तु नीलग्रीवस्य विषपानमिवान्यकृताशुद्धि विष हठाद् दयानन्दस्य गलादधोऽवतार्यते । श्रीमता विद्वद्वर्येण युधिष्ठिरमहाभागेन यथोक्तं यत् । "ऋषि के मूल संस्कृत पाठ के अनुसार नवीन यथार्थ भाषानुवाद होना चाहिये ।" तत्सत्यं युक्तं च ।

अनेन विद्वन्महाभागेन ऋग्वेदादिभाष्यभूमिकायां यत्र तत्र सशोध्य त्रुटिराहित्य च विधाय यत् प्रकाशितं तन्महदुपकृतमस्माकम् । मन्ये, संशोधितानि कानिचित् स्थलानि केषांचिन्मते विवादपदभाञ्जि भवितुमर्हन्ति तत्सम्मिल्य विचारणीयानि, तथापि प्रयासोऽयं भृशमभिनन्दनीयः । ऋग्वेदादिभाष्यभूमिकाया परिशिष्टरूपेण यत् प्रकाशितं तदेषामेव महाभागानां साधु प्रयत्नजातमिति मन्येऽहम् । अस्माकमयमभिलाषो विद्यते यन्महाभागोऽयं स्वामिविरचितवेदभाष्यमपि संशोध्य प्रकाशयेच्चेत् तन्महानुपकारो भविष्यति । सर्वैर्वेदप्रेमिभिरिदं पुस्तकं सपरिशिष्टमवश्यं ग्राह्यं पठनीयं च ।

—०—

# दर्शनशास्त्र की निरुक्ति

प्रो० अभेदानन्द एम० ए० वेदान्ताचार्य दर्शन-विभाग, गुरुकुल कांगड़ी

दर्शनशास्त्र से हम सांख्य, वेदान्त, मीमांसा, न्याय, वैशेषिक आदि युक्तिबहुल सुप्रसिद्ध चिन्तन शास्त्रों को ही समझते हैं; और इन शास्त्रों के लिये 'दर्शन' शब्द व्यवहृत होता है। दर्शन शब्द के इस प्रकार व्यवहार का मूल कहां है ? वैदिक साहित्य में सामवेद, यजुर्वेद और अथर्ववेद में दर्शन शब्द का प्रयोग नहीं देखते। ऋग्वेद में एक बार मात्र दर्शन शब्द का प्रयोग पाते हैं 'पशुं न नष्टमिव दर्शनाय'। किन्तु यहां पर दर्शनशब्द का साधारण देखना ही अर्थ है। कोई पारिभाषिक अर्थ नहीं है। वैदिक-संहिताओं में दर्शनशब्द का प्रयोग एकाधिकबार हुआ है। परन्तु उसका भी अर्थ दर्शनीय ही है। किसी पारिभाषिक अर्थ में प्रयुक्त नहीं। गोपथब्राह्मणादिओं में जो दर्शन शब्द मिलता है उसका भी साधारण देखना ही अर्थ है। वृहदारण्यक उपनिषद् में याज्ञवल्क्य द्वारा मैत्रेयी के प्रति उपदेश के समय सर्वप्रथम हम दर्शनशब्द को आत्मदर्शन के सही अर्थ में पाते हैं। यहां पर दर्शनशब्द से रूप देखना नहीं है अपितु अरूप आत्मदर्शन को ही लक्ष्य किया गया है। 'आत्मावारे द्रष्टव्य श्रोतव्यो मन्तव्यो निदिध्यासितव्य १' इस प्रकार दर्शनशब्द आत्मदर्शन के अर्थ में प्रयुक्त हुआ है। और इस लिये विश्व के सर्वप्रथम दार्शनिक याज्ञवल्क्य ही हैं।

'दृश्यते ज्ञायते अनेन' इस व्युत्पत्ति से दर्शन-शब्द आत्मज्ञान के साधन-अर्थ में प्रयुक्त जान पड़ता है। और याज्ञवल्क्य की व्याख्या से भी यही सिद्ध होता है। विचार-दृष्टि की सहायता से आत्मदर्शन और उसके साधनों का वर्णन करना ही दर्शनशास्त्र का प्रधान लक्ष्य है इस लिये षड्दर्शन ही नहीं, अपितु जिस किसी शास्त्र में आत्मदर्शन अर्थात् तत्त्वज्ञान का वर्णन है, वह दर्शनशास्त्र से अभिहित होगा। और जिस शास्त्र में तत्त्वज्ञान का वर्णन नहीं उसे दर्शनशास्त्र नहीं कह सकते, यद्यपि पाश्चात्य दार्शनिक भाषा-विश्लेषण को भी जो कि तत्त्व-शास्त्र की भाषा का तार्किकविश्लेषण करता है—दर्शनशास्त्र कहते हैं, फिर भी मूर जैसे विद्वान् दार्शनिक अपने भाषा विश्लेषण को दार्शनिक मत का नाम देना उचित नहीं समझते। इस प्रकार पूर्वोक्त रीति से चाहे आस्तिक और चाहे नास्तिक शास्त्र ही क्यों न हो यदि तत्त्व-ज्ञान की व्याख्या करता है तो वह दर्शनशास्त्र है। क्योंकि आस्तिकता और नास्तिकता वेद या ईश्वरसम्बन्धी मान्यता से सम्बन्ध रखती है, न कि तत्त्वदर्शन से, बुद्ध तत्त्वद्रष्टा थे, आस्तिक नहीं थे।

उपनिषद् के बाद महाभारत में भी सांख्य-दर्शन, योगदर्शन, आदिओं में भी दर्शनशब्द का प्रयोग पाते हैं '२सांख्य योग पञ्चरात्रं वेदा. पाशुपत तथा–. .।' 'योगदर्शनमेतावदुक्त ते तत्त्वतो मया'। श्रीमद्भागवत् में भी शास्त्रीय परिभाषा के अनुकूल दर्शनशब्द का प्रयोग देखने को मिलता है। '३स्तूयमानो जनैरेभिर्मायया नामरूपया। विमोहितात्मभिनानादर्शनै र्न च दृश्यते ।।' कौटिल्य भी षडदर्शनों से परिचित थे। सांख्य, योग और लोकायत ये तीन दर्शन-शास्त्र कौटिल्य के अनुसार 'आन्वीक्षिकी' विद्या के

१. वृहदारण्यकोऽपनिषद्, याज्ञवल्क्य-मैत्रेयीसंवाद

२ महाभारत, शा० प०

३ श्रीमद्भागवत्

अन्तर्गत हैं एवं वेदान्त और मीमांसा ये दोनों त्रयी विद्या के नाम से प्रसिद्ध हैं, तथा न्याय-वैशेषिक उनके अनुसार लोकायत के ही अन्तर्गत हैं। महाकवि भास ने (ई० पू० चतुर्थशतक) प्रतिमा नाटक में महेश्वर के योगशास्त्र और मेधातिथि के न्यायशास्त्र का उल्लेख किया है। ई० प्रथम शतक के प्रथम भाग में ललित विस्तर में गौतम बुद्ध की विद्याशिक्षा के प्रसंग में अन्यान्य शास्त्रों के साथ सांख्य, योग, वैशेषिक और हेतुविद्या अर्थात् न्यायशास्त्र का उल्लेख मिलता है। योगदर्शन के [१]व्यासभाष्य में प्राचीन सांख्याचार्य पञ्चशिख का जो सूत्र उद्धृत किया गया है उसमें दर्शनशब्द का प्रयोग अवश्य है; परन्तु वह दर्शनशास्त्र परक शब्द नहीं है। जैन विद्वान् उमास्वाति ने उनके ग्रन्थ तत्त्वाधिगम सूत्र में दर्शनशब्द का एकाधिकबार प्रयोग किया है। उमास्वाति के द्वारा दर्शनशब्द की प्रयोगपद्धति को देख कर यह स्पष्टतया कहा जा सकता है कि उन्होंने दर्शनशब्द का सार्थक प्रयोग किया है। ई० तृतीय शताब्दी में न्यायभाष्यकार वात्स्यायन ने दर्शनशास्त्रबोधक दर्शनशब्द का प्रयोग अपने न्यायभाष्य में किया है। '[२]अस्त्यात्मा-इत्येकदर्शनं नास्त्यात्मा इत्यपरम्। वैशेषिकभाष्यकार प्रशस्तपाद ने भी अपने भाष्य में दर्शनशास्त्रपरक दर्शनशब्द का प्रयोग किया है। किरणावलीकार उदयनाचार्य, न्यायकन्दलीकार श्री कण्ठाचार्य ने भी दर्शनशब्द को दर्शनशास्त्रपरक लिया है। 'आत्मतत्त्वविवेक' के उपसंहार में उदयनाचार्य ने 'न्यायदर्शनोपसंहार' कह कर स्पष्टतः न्यायदर्शन को दर्शनशास्त्र कहा है। शारीरिक मीमांसा भाष्य में आचार्य शंकर ने 'वैदिकदर्शन' 'उपनिषद्दर्शन' आदि वाक्यों से दर्शनशास्त्र का उल्लेख किया है। संक्षेप में इतना कह देना पर्याप्त है कि इन आचार्यों ने दर्शनशब्द का प्रयोग उसके शास्त्रीय अर्थ में किया है। बौद्ध पण्डित रत्नकीर्ति ने 'क्षणभंग-सिद्धि' में दर्शनशब्द का अनेकों वार प्रयोग किया है। प्राचीन पालित्रिपिटक में अनेकों स्थानों में 'दिट्ठि[३]' शब्द का प्रयोग आया है। पालिभाषा का यह 'दिट्ठि' शब्द संस्कृत भाषा के 'दृष्टि' शब्द का अपभ्रंश है। और दृष्टि शब्द तथा दर्शनशब्द एक ही 'दृश्' धातु से बने हैं। अतएव कोई असंगति नहीं है। क्योंकि न्यायभाष्यकार वात्स्यायन ने दृष्टि और दर्शन को तुल्यार्थ में ग्रहण किया है। उन्होंने अपने भाष्य में 'सांख्यदृष्टि' शब्द से सांख्यदर्शन को ही लिया है।

इस प्रकार यह सिद्ध हुआ कि दर्शनशब्द का प्रयोग प्राचीन है; इसी कारण जैन पण्डित हरिभद्र सूरि ने भारतीयदर्शन के प्रथम संग्रहग्रन्थ को 'सर्वदर्शनसमुच्चय' नाम से विभूषित किया है। इसमें न्याय, वैशेषिक, सांख्य, मीमांसा बौद्ध और जैन इन मतों का संग्रह है। परवर्तीकाल में माधवाचार्य ने 'सर्वदर्शनसंग्रह' में भारतीय विभिन्न दर्शनों का संग्रह किया है। माधवाचार्य ने चार्वाक से लेकर वेदान्त तक १६ दर्शनों का संग्रह प्राञ्जल और हृदयग्राही रूप से किया है।

दर्शनशब्द इस प्रकार आस्तिक और नास्तिक सभी विचारों का द्योतक है। इन दर्शनों को पढ़ने से यह ज्ञात हो जाता है कि हम इन ग्रन्थों को क्यों दर्शनशास्त्र कहते हैं। दर्शनशास्त्र का यह अर्थ बृहदारण्यक श्रुति के आत्मदर्शन के

( शेष पृष्ठ ३५६ पर )

१. १।१।४ योगदर्शन व्यासभाष्य

२. न्या० भा० १।१।२३

३. ई० पू० चतुर्थ—त्रिपिटक

# प्राचीन भारतीय शिक्षा-पद्धति

श्री भूपेन्द्रनाथ सरकार, १२ एण्ड्रूज पल्ली, डाकघर—शान्तिनिकतन, प० बगाल

भारत के प्राचीन ऋषियो द्वारा विकसित की गई शिक्षा-पद्धति का ज्ञान हमारे लिये आवश्यक है। पूर्वी देशो पर पश्चिमी सभ्यता के प्रभाव पड़ने का यह परिणाम हुआ है कि हम अपने प्राचीन स्वर्णयुग की बहुमूल्य विरासत को खोते चले जा रहे है। सुप्रसिद्ध ब्रिटिश राजनीतिज्ञ रैम्जे मैकडानल्ड ने लिखा है, "हम इस बात का प्रयत्न करते रहे है कि भारतीय परम्पराओं से परिपूर्ण भारतीय मस्तिष्क में पश्चिमी सभ्यता को भरदें। हम ने इस बात का प्रयास किया है कि हम भारत में नवीन आक्सफोर्ड और ईटन का निर्माण करें। हमारा लक्ष्य भारतीय सस्कृति का विध्वन्स करना रहा है ... भारतीयो के मनो में पश्चिमी सस्कृति के विचार जिस मात्रा में बढे है वह वस्तुतः अत्यन्त भयावह है।"

वैदिक युग मे गुरुओ के गृह शिक्षा का केन्द्र हुआ करते थे। शान्त वनो में अवस्थित इन शिक्षा केन्द्रो में गुरु अपने परिवारो के साथ इस उद्देश्य के साथ रहा करते थे कि वे इस जगत् में भगवान का दर्शन कर सके और अपने जीवन में भगवान का साक्षात्कार कर सके। समाज में उनका वही स्थान था, जो सौरमण्डल में सूर्य का स्थान है। वे ऐसा केन्द्र थे जहां से समाज प्रकाश और जीवन को ग्रहण करता था। इनमें त्याग को बहुत महत्व दिया जाता था। शिक्षा पद्धति का मौलिक तत्व त्याग और तपस्या था और यह आत्म साक्षात्कार की एक प्रक्रिया थी। एक भारतीय दार्शनिक ने कहा है कि शिक्षा का उद्देश्य जन्म मरण के चक्र से मुक्ति पाना और परब्रह्म की प्राप्ति करना था। प्राचीन भारत में जिस ढग से व्यक्ति के सामाजिक दायित्वों को स्वीकार किया गया है, वैसा शायद ही कहीं किया गया हो। यह मान लिया गया था कि व्यक्तित्व का विकास मानवीय प्रकृति के सभी तत्वो के समन्वयपूर्ण प्रशिक्षण से हो सकता है। अतः उस समय यह नियम बनाया गया था कि शरीर की शक्ति को बनाये रखने के लिये समुचित भोजन की अथवा अन्न की तथा इस शरीर को विकसित और सुदृढ बनाने के लिए नियमित व्यायाम की व्यवस्था आवश्यक है। शरीर के प्रधान तत्व या प्राण का प्रशिक्षण आसन और प्राणायाम के साधनों से किया जाना चाहिए। क्योकि इनसे पांचो इन्द्रियो पर नियन्त्रण स्थापित हो सकेगा। इसके साथ ही बुद्धि के प्रशिक्षण को भी व्यवस्था की गई थी। इसे बौद्धिक शिक्षा कहा जा सकता है। शिक्षा की प्रक्रिया विज्ञानमय कोष के साथ ही समाप्त नहीं हो जाती थी। इसका चरम विकास आनन्द की प्राप्ति मे होता था। यह आनन्द अन्य सब गुणो के सफल नियन्त्रण से एवं प्रयोग से तथा "सत्य शिव सुन्दर" के विचार और ध्यान से उत्पन्न होता था। इस प्रकार हम यही देखते है कि मनुष्यविषयक भारतीय धारणा में शरीर, बुद्धि और आत्मा को इनका समुचित स्थान दिया गया है।

एक वैदिक सूक्त में यह कहा गया है कि सभी सामान्य व्यक्ति बाहरी दृष्टि से समान थे, बौद्धिक प्रखरता एवं उत्कर्ष से कुछ व्यक्ति दूसरे व्यक्तियों

की अपेक्षा अधिक उत्कृष्ट थे। शिक्षा के महत्व पर इस विश्वास के कारण भी बल दिया गया कि देवता बुद्धिमानों और ज्ञानियों के मित्र होते हैं। उस समय यह नियम बनाया गया था कि प्रत्येक नर नारी को अपने शैशव और यौवन में ब्रह्मचर्य व्रत का पालन करते हुए शिक्षा प्राप्त करनी चाहिए। इस विषय में यह बात उल्लेखनीय है कि कुछ वैदिक सूक्तों की ऋषि नारियां थी, जैसे विश्ववारा, घोषा, लोपामुद्रा और अपाला। उस समय विवाह की इच्छा रखने वाली लड़की के लिये शिक्षा पाना एक आवश्यक धार्मिक कर्त्तव्य था। लड़कियों को नाना प्रकार की कलाओं और शिल्पों की शिक्षा दी जाती थी। उस समय चौंसठ प्रकार की कलाए मानी जाती थीं और इनका अभ्यास किया जाता था। केवल बुद्धि और ज्ञान को पर्याप्त नहीं समझा जाता था। विद्यार्थियों में वक्तृत्व कला के विकास पर भी बल दिया जाता था।

वैदिक युग की शिक्षापद्धति ने ऐसे लोगों को उत्पन्न किया जिन्हें अपने धार्मिक और साहित्यिक वाङ्मय का अच्छा ज्ञान था, जिनका बौद्धिक दृष्टि से समुचित विकास हुआ था और जो अपने परिवार का पेशा करने में कुशल थे। इनके मन नये विचारों के लिये सदा खुले रहते थे, वे सब प्रकार की रूढ़ियों से मुक्त और जिज्ञासा की मनोवृत्ति रखने वाले और ज्ञान के नवीन क्षेत्रों के अन्वेषण के लिये उत्कण्ठित रहने वाले थे। हमारे एक भारतीय पुरातत्व विशारद डा० आनन्द सदाशिव अल्तेकर ने वैदिक युग की शिक्षा-पद्धति के सम्बन्ध में यही परिणाम निकाला है।

ऋग्वेद के एक मनोरंजक प्रकरण से इस बात का संकेत मिलता है कि इस युग में गम्भीर अध्ययन के बाद विद्यार्थियों को विभिन्न विषयों का ज्ञान कराया जाता था जिससे शिष्य एक उत्तम व्याख्या करने वाले गुरु का स्वरूप धारण करते थे।

मानव जाति के महान अधिकारपत्र का स्वरूप रखने वाली उपनिषदें हमें एक ऐसे सत्यकाम नामक पितृहीन बालक की कथा बताती हैं जिसने प्रकृति से उच्चतम सत्य का ज्ञान प्राप्त किया था। (परवर्ती युगों में प्रकृति वर्ड्सवर्थ और रवीन्द्रनाथ ठाकुर के लिए एक महान शिक्षक बनी थी)। सत्यकाम एक निर्धन नौकरानी का लड़का था। वह जब अपने गुरु के पास पढने आया तो उसे अपने पिता के नाम का ज्ञान नहीं था। गुरु ने जब उससे उसके परिवार के विषय में पूछा तो उस सत्यवादी बालक ने उत्तर दिया "मुझे इस बात का ज्ञान नहीं है कि मैं किस वंश का हूं। इस विषय में मैंने अपनी माता से पूछा था और उसने उत्तर दिया कि अपने यौवन में मैंने दासी के रूप में कार्य करते हुए तुझे प्राप्त किया था। मैं यह नहीं जानती कि तू किस परिवार से सम्बन्ध रखता है।" गुरु सत्यवादी बालक से प्रसन्न हुआ और उसने उसे अपने घर में रखा। बालक ने अपने गुरु की खूब सेवा की। वह उसके पशुओं को चराने के लिये ले जाता रहा और कुछ समय के भीतर उसने उस महान सत्य को सीख लिया, जिसकी शिक्षा प्रकृति उससे ज्ञान ग्रहण करने वाले सभी व्यक्तियों को प्रदान करती है। उसे सत्य का ज्ञान उन पशुओं से हुआ, जिन्हें वह चराया करता था। उस अग्नि से हुआ, जिसे वह प्रज्वलित किया करता था। उन पक्षियों से हुआ जो उसके चारों ओर सन्ध्या काल में उस समय उड़ा करते थे जब वह गौओं को बाड़े में बन्द करता था और सायंतन अग्नि में समिधायें डालता था। उसके गुरु ने आश्चर्यचकित होकर उससे

पूछा "तुम भगवान को जानने वाले व्यक्ति की तरह से तेजस्वी प्रतीत होते हो। तुम्हें यह ज्ञान किसने प्रदान किया है?" युवा शिष्य सत्यकाम का उत्तर था "मनुष्यों ने मुझे यह ज्ञान नहीं दिया है। उसने आकाश से, पृथिवी से, द्युलोक से, समुद्र से, सूर्य से, चन्द्रमा से, विद्युत और अग्नि से, जीवित प्राणियों के अङ्गों और मनों से तथा समूचे विश्व से यह ज्ञान प्राप्त किया है। आरुणि और उपमन्यु की कहानियां इतनी प्रसिद्ध हैं कि यहां उनकी पुनरावृत्ति करने की आवश्यकता नहीं है। वे आधुनिक विचार रखने वाले हम जैसे व्यक्तियों को विचित्र प्रतीत होती हैं, किन्तु वे गुरु के प्रति शिष्यों की अगाध भक्ति और आज्ञा-पालन की भावना को प्रदर्शित करती हैं। गुरु ऐसे शिष्यों को अपना सर्वोत्तम ज्ञान दिया करता था। गुरु शिष्यों का यह आदान प्रदान भारत की प्राचीन शिक्षा-पद्धति की एक विलक्षण विशेषता थी।

उपनिषदों में ऐसे विद्वानों और विद्वान् मण्डली का वर्णन मिलता है। जो समूचे देश में भ्रमण करती रहती थीं, ज्ञान के सुप्रसिद्ध केन्द्रों मे वाद-विवाद और शास्त्रार्थ करते हुए ज्ञान का प्रसार करती थीं। उस समय जनक जैसे राजाओं के दरबारों में, पचाल परिषद् जैसी सभाओं में अथवा पाली ग्रन्थों में वर्णित सन्थागारों और स्मृतियों में वर्णित सभाओं में होने वाले विभिन्न सम्मेलनों में दार्शनिक वाद-विवाद हुआ करते थे।

उत्तर वैदिक युग में शिष्य को छात्र कहा जाता था। क्योंकि उसका गुरु सभी प्रकार की बुराइयों से उसकी रक्षा किया करता था। गुरु पाठ को पांच बार दोहराता था। शिष्यों का वर्गीकरण उन गलतियों की संख्या के आधार पर होता था जो वे वेदमन्त्रों का पाठ करते हुए करते थे। कन्याओं को वैदिक सम्प्रदायों या चरणों में शिक्षित किया जाता था। उस समय स्त्री विद्यार्थियों के निवास के लिए छात्रावास भी होते थे। इन्हें छात्रीशाला कहा जाता था। राजदरबारों में शिक्षित स्त्रियां दार्शनिक विवादों में भाग लिया करती थीं। इनमें गार्गी आदि के नाम उल्लेखनीय हैं। प्रत्येक चरण या वैदिक सम्प्रदाय में गुरुओं का तथा अधिक विद्वान् व्यक्तियों का एक आन्तरिक वर्ग होता था, इसे परिषद् कहा जाता था। वेदमन्त्रों के सन्दिग्ध पाठों और अर्थों के विषय में परिषद् के निर्णय चरण के लिए मान्य समझे जाते थे।

डा० राधाकुमुद मुकर्जी के मतानुसार उस समय अध्ययन किये जाने वाले विषय निम्नलिखित थे—

१ तीन वेद अथवा श्रुति।
२ चुने हुए वैदिक सूक्त तथा मन्त्र।
३ अथर्ववेद।
४ ब्राह्मण।
५ आरण्यक।
६ उपनिषद्।
७ छः वेदाङ्ग।
८ दर्शन शास्त्र।
९ धर्मशास्त्र या स्मृति।
१० इतिहास तथा पुराण।
११ वैखानस सूत्र।
१२ बौद्धादि नास्तिक शास्त्र।
१३ वार्ता अथवा लौकिक विषय।
१४ दण्डनीति या राजनीति शास्त्र।

उन दिनों विद्यार्थी विशेष विषयों में भी गम्भीर अध्ययन करके विशेष ज्ञान प्राप्त करते थे, कुछ व्यक्ति (वैदिक लोक) वेदों में विशेष ज्ञान प्राप्त करने वाले होते थे। विद्यार्थी काल की अवधि अध्ययन के विषय पर अवलम्बित होती थी।

